# ॥ श्रीयुगलगीतम् ॥

## ॥ द्वात्रिंशोऽध्यायः ॥

॥ श्रीशुक उवाच ॥

गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ।
कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ १ ॥
वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुम् ।
कोमलाङ्गुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुन्दः ॥ २ ॥
व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः ।
काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥

द्वात्रिंशेन्तर्गोपिकानां स्वानन्दं भगवान् हरिः । पूरयामास येनैव पूर्णानन्द इतीर्यते ॥१॥
अन्तःप्रविष्टो भगवान् मुखादुद्धृत्य कर्णयोः । पुनर्निवेश्यते सम्यक् तदा भवति सुस्थिरः ॥२॥
शब्दार्थयोर्मुख्यतात्र युग्माः श्लोकास्ततोत्र हि । सर्वेषु चैव मासेषु यत् करोत्युच्यते हि तत् ॥३॥
अतोत्र मासयुग्मा हि प्रक्रमः फलमेव च । आद्यन्ते चापरं युग्मं त्रयोदश भवन्ति तत् ॥४॥

एवं भगवता सह रात्रौ क्रीडामुक्त्वा दिने तासां संसारप्रवृत्तिर्भविष्यतीत्याशङ्क्य दिवसेषु भगवद्गुणवर्णनपरा जाता इति वदन् गुणवर्णनाया आवश्यकत्वायारम्भे दुःखं पर्यवसाने सुखमिति निरूपयन् प्रथमं प्रथमप्रवृत्तावपि गोपिकानां दिवसेषु परमं दुःखं जातमित्याह गोप्य इति,केवल-पदात् पूर्वोक्ता ग्राह्याः, सदानन्दे वनं गते तमन्वेव द्रुतं चित्तं यासां, वस्त्वन्तरग्रहणाक्षमं चित्तं जातं द्रुतशब्दाद् विलय उक्तः, ततः सर्वतः प्रसृतं सूक्ष्मभावापन्नं सदानन्दस्य लीलां गृहीतवत्, अतः कृष्णलीलाः प्रगायन्त्यो जाताः,यथा स्वरूपं सदानन्दरूपं तथा तल्लीला अपीति तदात्मकत्वं च लीलानां ज्ञापयितुं पुनर्नामग्रहणं कृतमन्यथा तत्पदमेव वदेत् तथा सति तत्सम्बन्धित्वमात्रं *प्राप्नोत न तूक्तरूपत्वं, अवश्यं ग्राह्यं चैतद् यतः स्वरूपवियोगे तदतिरिक्तस्य न जीवनहेतुत्वं ततो* हीनत्वात्, ततो यथाकथञ्चिन् महता मानसदुःखेन वासरान् निन्युः, यदा पुनस्तच्चित्तं प्रकीर्णे भगवच्चरित्रे विलीनं सदेकभावं प्राप्स्यति तदा पूर्णमनोरथा भविष्यन्ति, इदानीं सर्वा सामग्री वि-शकलितेति दुःखेन दिननयनं, वासरपदाद् रात्र्यर्थं कथञ्चित् प्राणानां धारणं लक्ष्यते ॥ १ ॥

सर्वोत्तमा हरेर्लीला वेणुनादपुरःसरा । हेतुः सर्वत्र चाच्येर्थे प्रथमेषु निरूप्यते ॥१॥
देवस्त्रियस्तथा गावः सरितः पादपा लताः । पक्षिणश्च तथा मेघा व्रजाद्या गोपिकास्तथा ॥२॥
हरिण्यो देवगन्धर्वा द्विधा च भगवान् हरिः । उत्तरेषु निरूप्यन्ते रसज्ञा वेणुवादने ॥३॥
जानाति भगवानेव जानात्येव हरिः स्वयम् । अतोन्ते भगवानुक्तो वाग्द्वयमनन्यधीः ॥४॥
अनुभावस्तु नादस्य स्त्रीषु पूर्वमुदीर्यते । त्रिविधासु ततः पुंसु व्रजा गोपी तथा मृगी ॥५॥
त्रयोत्र त्रिविधाः प्रोक्ताः प्रकीर्णाः सकलाः सुराः । सर्व एवानभिज्ञा हि वस्तुसामर्थ्यसंयुताः ॥६॥
एवं वेणुर्द्वादशधा फलतीति निरूपितः ॥६ १/२॥

तत्र प्रथमं स्त्रीप्राधान्याद् देवस्त्रियो मुख्या इति तासु वेणुनादप्रभावं वक्तुं येन प्रकारेण वेणुनाद उत्तिष्ठति तं प्रकारमाहुर्वामबाहुकृतवामकपोल इति, यत्र मुकुन्दोधरार्पितवेणुमीरयति तत्र तस्मिन् क्षणे व्योमयानवनिताः कश्मलं ययुरितिसम्बन्धः, वेणुनादः पञ्चधा भवति मुखस्य परितः समतयोपर्यधश्च धारणेन, तत्र स्त्रीणां कामोद्बोधको वामपराङ्गतः, स्त्रीणां पुरुषाणां च

१. °त्र । २. दिवः स्त्रियः । ३. °वादे तु ।

हन्त चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत् ।
नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥
वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् ।
दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥

दक्षिणो देवानामुच्चैरधस्तिरश्चां समतया सर्वेषामचेतनानां च, तत्र देवस्त्रीणां कामोद्बोधको वामपरावृत्त एवेति तथा निरूप्यते, मानुषभावाद् देवभावो महानिति मानुषनादेन देवस्त्रीणां भ्रमो न भविष्यतीत्याशङ्क्य 'तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्य'मितिवाक्याद् भ्रूविलासं नादे योजितवान् ,तदाह, वामबाहौ कृतो योजितो वामकोपलो येन वल्गिता भ्रूर्यस्येति भ्रूरत्र दक्षिणा तथैवाभिनयभावात् ,वल्गितोच्चैर्गतियुक्ता,अधरः पूर्वं वर्णितो लोभात्मकः,तत्र चेत् समर्पितः परमानन्दं न प्रयच्छति काममेवोद्बोधयति यतः श्रुत्वापि विरहजनितं क्लेशमेव प्राप्नुवन्ति न तु परमानन्दं तत्रापि क्रियाशक्तिः पुष्टा चेद् भवेत् तदा लुब्धादपि फलं सिध्येत् तदपि नास्तीत्याह, कोमलाङ्गुलिभिराश्रितो मार्गो यस्य, आदौ मन्दप्रकारेणैव वेणुनादस्योचितत्वात्, मार्गास्तस्य रन्ध्राः, तेषां गाढभावेन निष्पीडने तारो नादो भवति मध्यभावे मध्यमः कोमले मन्द इति, गोप्य इतिसम्बोधनं सर्वानुभवसाक्षिकमेतदिति ज्ञापयितुं, ईरणमत्र वादनं, प्रयोजनमाह मुकुन्द इति, वेणुनादेन शुद्धं चेज् जगत् तदा मोक्षं दास्यामीति, एवं हितार्थेपि वेणुवादने ये मोक्षानधिकारिणस्तेषां काम एव जात इत्याहुर्व्योमयानवनिता इति, व्योमयाना विमानयानाः सर्वे देवयोनयस्तेषां वनिताः,अधिकारित्वात् स्त्रीत्वाद् भोग्यत्वाच्च न मुक्त्यधिकारिण्यः, सिद्धैःसहिता अपि, भगवद्व्यतिरिक्तं सर्वमेव दातुं समर्थाः, स्वयमत्यन्तं गाने निपुणाः, आदौ वेणुनादं श्रुत्वा विस्मिता जातास्ततोल्पकामोद्रेके तद् वेणुनादमुपधार्य सलज्जा जाता भर्तारो ज्ञास्यन्तीति,ततोत्यन्तमुद्रेके स्वात्मरक्षार्थं कामेन मरणशङ्कया काममार्गणेभ्यः समर्पितं चित्तं याभिस्तादृश्यो जाताः, यथा मारकाय मारणात् पूर्वं स्वयमेव समर्प्यते भीरुभिः, ततः कामेन पीडिताः कश्मलं मूर्च्छां ययुः, सा मूर्च्छात्यन्तविसारिकेत्याहापस्मृता नीवी कटिवस्त्रं याभिरिति, एवं वेणुनादोत्यन्तं कामबोधक इत्यस्माकं मूर्च्छादौ किमाश्चर्यमितिभावः ॥ २–३ ॥

गवामपि वेणुनादेन तथा जातमिति वक्तुं प्रकारान्तरेण वेणुरवोद्गममाहुर्हन्त चित्रमिति, अबला इदमाश्चर्यं शृणुत, यर्हि नन्दसूनुः कूजितवेणुस्तर्हि वृषा गावो दन्तदष्टकवला निद्रिता आसन्नितिसम्बन्धः, कामः पशुषु सजातीय एव नोत्कृष्टे नापकृष्टे, अश्वतरे त्वन्यैव व्यवस्था, हीनेषु महतो रमणार्थं सम्बन्धोपि रसाभासजनकोतः सम्भोगलक्षणं कामं निराकृत्य पशुत्वत्यावश्यकं भक्ष्यं निरुणद्धि, पूर्वोक्तं 'वामबाहुकृतवामकपोल'त्वमनुवर्तते, तत्रैवावान्तरभेदो वक्तव्यः, हन्तेति खेदे, यत्र गवामपि सर्वक्रियानिवृत्तिस्तत्रास्माकं न निवर्तत इति चित्रं, पूर्वापेक्षयाप्युत्कृष्टं, देवस्त्रियो हि पुरुषोत्तमे कामुक्यो भवन्त्येव, इदं त्वत्याश्चर्यमिति, अबला इतिसम्बोधनं गत्वा दर्शनाभावाय, इदं मया प्रोच्यमानं शृणुत, अत्र गोपिका नवविधा गुणातीते प्रकारत्रयमिति कर्मज्ञानभक्तिभिर्वैक्तव्यवस्थैषा प्रथमा राजस इयं राजसराजसी, अपेक्षितं पूर्वं सर्वमेवानुवर्तते सर्वत्र, आदौ भगवतः स्वरूपं शृणुतेति, तं चतुर्धा वर्णयति, हारवद् हासो यस्य, उरसि स्थिरा विद्युद् यस्य,नन्दस्य च सूनुः,आर्तजनानां सर्वेषामेव नर्मदः,तत्र हेतुरयमिति,

१. राधाः ।

बर्हिणः स्तवकधातुपलाशैर्बद्धमल्लपरिवर्हविडम्बः ।
कर्हिचित् सवल आलि सगोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥ ६ ॥
तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोनिलनीतम् ।
स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥ ७ ॥

अन्यथेदानीमग्रे प्रकटो न भवेत्, द्वितीये मुहूर्ते निर्गच्छन्तं बालस्याह, तदा प्रतिमुहूर्तं युगलानि भवन्ति, सन्ध्यासन्ध्यांशयोरन्तरेण द्वादशैव मुहूर्ता इति सोमोत्पत्तौ निर्णयः, अन्येषां हास्यं किर्मीरितं भवति रज्जुवद् भगवतस्तु दन्तानां कान्त्या विभक्तो हासो मुक्ताहारवद् भवति यथा रत्नैर्व्यवहिता मुक्ता इति, अनेन जगतः प्रपञ्चे मोहजनकत्वं स्थिरीकृतं, स्नेहकलाभिर्माधा विभक्तेतिश्रुतार्थापत्तिरर्थनिरूपणे मूलं सर्वत्र, यथा दृष्टे नानुपपत्तिर्दृष्टानुसारेणैव सर्वं व्यवस्थाप्यते 'न हि दृष्टेनुपपन्नं नाम व्याघाता'दिति लौकिकानामेषा व्यवस्था सर्वथा दृष्टविरोधो नाङ्गीक्रियत इति तथा वैदिकानां श्रुतिः, यावत्तैव चोध्यमानः पदार्थः स्थिरीभवति तावांस्तदनुगुण उच्यत इति सर्वत्रैवैषा व्यवस्था,न केवलं संसारे पुत्राद्यासक्तिमेव स्थिरीकरोति किन्तु धनासक्तिमपीत्याह स्थिरा लक्ष्मीर्यत्रेति, एवं प्रमाणबलनिराकरणार्थं द्वयं विधाय प्रमेयबलनिराकरणार्थं द्वयं कृतवानित्याह, यतोयमेव नन्दस्य सूनुर्जातः, आर्तानां च स्वयमागत्य सुखं प्रयच्छति, परिदृश्यते च तथेति च प्रमाणं, न हि महानेवं करोत्यत इदमाश्चर्यं, एतमेवार्थं प्रकटीकुर्वन् कूजितवेणुर्भवति, अथ वा पूर्वापेक्षयाधोवक्त्रलीलया वेणुर्वाद्यते, हारवद्धासो यस्मिन्नुरसि, तस्य स्थिरता विभागस्यैव चाश्चर्यं, श्रीवत्सोप्यत्युत्कृष्ट इति शोभार्थं तस्य स्थिरत्ववर्णनं, तादृशस्य नन्दसूनुत्वे स्नेहो वर्धते तत्रापि स्वोपकारक इति, कूजितत्वं वादनविशेषधर्मः सर्वेषामान्तरं प्राणधर्ममप्याकर्षति, यत्र पशूनामपि प्राणादिधर्महारी तत्रान्येषां किं वक्तव्यमिति पशूनां निरूपयति, एकस्य तथात्वं हेत्वन्तरसिद्धमपि भवेदत उक्तं वृन्दश इति समूहशः, यत्रैव वेणुनादः प्रविष्टस्तेषां सर्वेषामित्यर्थः, व्रजस्थिता वृषाः ककुद्मिनो मत्ता उत्सृष्टवृषा इव शकटादिनेतारस्ते व्रजसमीप एव तिष्ठन्तीति ग्राम्यपशूपलक्षणार्थं व्रजपदं, मृगा गावश्चारण्ये मिलिता भवन्ति, आरण्या ग्राम्याश्चैवं भवन्तीतिज्ञापनार्थं मृगपदं, किं बहुना? सर्व एव पशवो वेणुवाद्येन कृत्वा हृतचेतसो भवन्ति,नापि भगवत्समीपगमने समर्थाः किन्तु हृतचेतसो दूरादेव भवन्ति,अनेन वेणुनादस्य स्वाभाविक एवायं धर्मो न तु भगवत्समीपकृत इति, कवलास्तृणरूपाः, केवलं दन्तैर्दष्टाः, न त्यागे न च भक्षणे समर्थाः, दन्तदंशमात्रेण प्रयत्नो निवृत्त इति नादस्येतरकार्यनिवर्तकत्वमुक्तं, पूर्वक्रियाया अत्यावश्यकत्वाय कवलपदं, देवस्त्रीवन्मूर्च्छानिवृत्त्यर्थमाह धृतकर्णा इति, अन्यत् सर्वं परित्यज्य कर्णमेव साधनं धृतवन्तः, ततो बाह्यान्निवृत्ता इत्याह निद्रिता इति, ततो नादेन सर्वतो व्याप्ता लिखितं गवादीनां चित्रमिव पश्चात् ते जाताः स्थावरापेक्षयापि स्थिरा जाताः, पूर्वोक्तार्थादधिकोर्थ इति चित्रता ॥ ४ ॥ ५ ॥

वेणुनादेन नदीनामतिजडानामपि स्पृहा जायत इति वक्तुं पुनर्वेणुनादं वर्णयन्ति बर्हिण इति, आवेशो देववेशश्च पूर्वं निरूपितौ, लीलावेशोधुना निरूप्यते, निरन्तरक्रिया हि नदीनां चेतनानां तु निद्रामूर्च्छादौ क्रियानिवृत्तिरपि दृष्टा नदीनां तु न कदापि निवर्तत इति, तत्रापि महतीनां, बन्धोपि न तासां भवति,सापि वेणुनादेन निवृत्ता, बर्हिणो मयूरस्य स्तवका गुच्छकाः पिच्छगुच्छानि धातवो गैरिकादयः पत्राणि च धातूनां वा पत्राकारेण लेखाः, कमलपत्राण्यप्याकारार्थं बध्यन्त इति तैः कृत्वा मल्लानां परिवर्होलङ्करणं वेश इति यावत्, स्वयं स्तवकादिभिः बद्धो योयं मल्लपरिवर्हस्तं विडम्बयति,विडम्बो वा बद्धः, अस्वाभाविकं विडम्बनमेव भवति

अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः।
वनचरो गिरितटेषु चरन्तीर्वेणुनाह्वयति गाः स यदा हि ॥ ८ ॥
वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः।
प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९ ॥

नटमल्लवत्, अनेनायं नादो नृत्योपयोग्येव निरूपितः, तेन क्रियाशक्तिरुद्गता नादस्था निरूपिता नदीनामाकर्षे हेतुर्भवति, कर्हिचिदिति यदोत्साहः क्रियाशक्तौ, अत एव सबलो बलभद्रसहितः, आलीतिसम्बोधनं गोप्यतयायमर्थो निरूपितोप्रतारणार्थं च, प्रायेणैषा तदा दर्शनार्थं गतवती स्नानादिव्याजेन,एवं सामग्रीं विधाय सोसाकं भोक्ता वस्तुतो वा जातो वा,तादृशो गोपैः सहितः, अनेनात्र वैकुण्ठस्थितलीला सूचिता, अत्रापि लक्ष्मीरसाभिः सहिता रात्रौ गोपैः सहिता दिवसे तिष्ठतीति, अत एव सम्बोधनं रहस्यसूचकं, तदा गाः समाह्वयति वेणुनादेनैव प्रकरणित्वाद् वेणुनाह्वयतीत्यग्रे वक्ष्यति, वेणुतुल्यतया निरूपणार्थं वा वेणोरग्रहणं,गवामाह्वाने हेतुर्मुकुन्द इति, मोक्षो हि ताभ्यो देय इति स्वतस्तासां साधनाभावादाकार्य प्रयच्छति, स्वरसं वा तत्र स्थापयितुं, उद्गता क्रियाशक्तिर्महदेव कर्म करोतीति गवामाकारणमुक्तं, तत्र योगार्थं ज्ञात्वा नद्योपि नित्यं गच्छन्तीति ताः स्थगिता जाता इत्याह तर्हीति,तत्क्षणमेव भग्नगतयो जाताः,न हि भगवदाज्ञा केनाप्युल्लङ्घ्या भवति, सरित इति प्रवाहैकस्वभावत्वं निरूपितं, तासां वैष्णवत्वकामना, तासां हि समुद्रोधिपतिः, यथा भगवान् पतिर्भूयात् तदर्थं तत्पदाम्बुजरजः स्पृहयतीर्जाताः स्पृहयन्त्यः, रजसः सम्बन्धार्थमुपायमाहानिलनीतमिति, अनिलेन वायुना स्वार्थं नीतं, तेन सह प्रत्यासत्तिः, जलार्थी सः, भगवदीया एव भगवत्सम्बन्धं प्राप्नुवन्तीति रजःकामना दूराभिप्राया, काम एवात्रोद्देश्यो देवतात्वान्नदीनां, अत एवाग्रे कालिन्दी तथा भविष्यति, इदानीं तथाभावे भाग्यं नास्तीत्याहाबहुपुण्या इति, न बहु पुण्यं यासां, यथा शीघ्रमेव गोरूपत्वं गोपालरूपत्वं दिवसे रात्रौ स्त्रीरूपत्वमिति, पुण्यैर्विना समीहितार्थसिद्ध्यभावात्,कथं ज्ञायते तासामेवम्भाव इति तत्राह वयमिवेति, यथा वयमबहुपुण्याः, अन्यथा दिवसे गावो गोपा वा भवेम, अतः स्वदृष्टान्तेन ज्ञायते स्पृहामेव कुर्वन्ति न तु तासां कार्यं सिध्यतीति, किञ्च तासां सात्त्विकभावादपि हृद्गतो भावो लक्ष्यत इत्याहुः प्रेमवेपितभुजा इति, प्रेम्णैव भुजानां वेपनं न तु वायुवशादतो विरहसन्तापयुक्ता इव लक्ष्यन्ते,किञ्च स्तम्भोपि जात इत्याहुः स्तिमितापइति, स्तिमिताः स्तब्धा आपो यासां, एवं रजोभेदात्त्रिविधा निरूपिताः ॥ ६ ॥ ७ ॥

सत्त्वभेदान् निरूपयितुं भगवन्तमपि तथा वर्णयन्त्यनुचरैरिति त्रिभिः,लताविहङ्गममेघाः सात्त्विकाः, एते वेणुनादेन भक्तिपूर्णा जाताः, तत्र प्रथमं वृन्दावनस्था लतास्तरवश्च वैष्णवा वेणुनादेनोद्गतप्रेमरसा जाता इति तदर्थं प्रकारान्तरेण वेणुनादमाह, तदर्थं प्रकारान्तरेण भगवानपि वर्णनीयः, स च भक्त्यनुसारेण लोकवेदानुसारेण च वर्णनीयः, तत्र भक्त्यनुसारेण प्रथममाह, अनुचरैः सेवकैर्गोपैः सम्यगनुवर्णितानि वीर्याणि यस्य, आदिपूरुष इव पुरुषोत्तम इव चानुचरैर्वेदैः सम्यक् सर्वोत्तमत्वेन वर्णितानि जगत्कर्तृत्वादीनि वीर्याणि यस्य, लोकानुसारेण माहात्म्यमाह सर्वोत्कृष्टमादिपूरुष इवाचलभूतिरिति, अचला विभूतिर्लक्ष्मीर्यस्य, अनुचरैः सर्वैरेव देवादिभिस्तथोक्तः, लौकिकाः स्वव्यवहार्यत्वात् पुरुषोत्तमतुल्यतामेवाहुरतो दृष्टान्तभावः, भिन्नतया वर्णनायां हेतुमाह वनचर इति वृन्दावनचरः सात्त्विकभावापन्नः सत्त्वभूमौ प्रतिष्ठित इति, गिरितटेषु गिरिप्रान्तेषु चरन्तीर्विषमस्थानात् समदेशे

दर्शनीयतिलको वनमालादिव्यगन्धतुलसीमधुमत्तैः ।
अलिकुलैरलघुगीतमभीष्टमाद्रियन् यर्हि कूजितवेणुः ॥ १० ॥
सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ।
हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥ ११ ॥

पश्चुहिते स्वयं तत्रत्यो भूत्वा समाह्वयति, लौकिकत्वाभावाय वेणुनैवाह्वयति, वेणुद्वारा तत्र प्रविष्ट इत्यग्रिमचरित्रेण ज्ञायते, अन्यथा वृक्षाणां तथात्वं न स्यात्, स इति येषु वनप्रदेशेषु रेमे, यदैवाह्वयत् तदैव मधुधाराः सस्रुः स्वेतिसम्बन्धः, युक्तश्चायमर्थः, अन्यथा वेणुनादाभिज्ञता तत्र च स्वनामसङ्केतो न स्यात्, अतस्तद्द्वारा भगवान् प्रविष्ट इत्यग्रेपि तथात्वं युक्तमेव, वनस्था लता असन्निकटे भगवांश्चरति स्वकीयांश्चाकारयतीति ज्ञात्वा तेषां भोगसिद्ध्यर्थं स्वस्मिन् विद्यमानमानन्दं प्रकटितवत्यस्तथा तरवश्च, यथा स्त्रियः पुरुषाश्च भगवदीया भगवति भगवदीयेषु च समागतेष्वानन्दयुक्ता भवन्ति भोगार्थं स्वकीयं च प्रयच्छन्ति तद्वदेतेपि, नन्वयं धर्मो जङ्गमानां न स्थावराणामिति चेत् तत्राहात्मनि विष्णुं व्यञ्जयन्त्य इति, चेतनेष्वेव भगवतः क्रियाज्ञानशक्त्योराविर्भावः सच्चिदानन्दरूपता च क्रमेणाविर्भवति, एतत् सर्वं भगवति निविष्टे भवति, सोपि निविष्टश्चेत् प्रकटीभवति तदैवं युज्यत इति, ते वृक्षादयः पञ्चधर्मयुक्ता आत्मनि विष्णुं व्यञ्जयन्त्य इव जाताः, तत्र प्रथमं क्रियाशक्त्याविर्भावमाह पुष्पफलाढ्या इति, यत्र हि भगवान् निविशते तत्रावान्तरफलं परमफलं च भवति, अतः कार्याद् व्यञ्जयन्त्य इव जाताः, पुष्पाण्यवान्तरफलरूपाणि परमफलानि तु फलानि तैः सर्वैराढ्या जाताः, भगवदर्थं सदाधिक्यमाह प्रणतभारविटपा इति, भारेणापि नमनं सम्भवतीति तन्निरासायादौ प्रणतत्वमुक्तं, प्रकर्षेण नता भारेण विटपाः शाखा येषां, प्रेमहृष्टतनव इति चिदुत्कर्षो ज्ञानरूपो निरूपितः, भक्ता एव हि प्रेम्णा हृष्टरोमाञ्चा भवन्ति, मधुधाराः स्वस्मिन् विद्यमानानन्दं भगवदर्थं बहिः प्रकटितवत्यः, एतत्सर्वपरिज्ञानमेव ज्ञानशक्तिः ॥ ८ ॥ ९ ॥

पक्षिणामपि वेणुनादकार्यं जातमिति तत्रोपयोगिरूपं वेणुनादं च वर्णयन्ति दर्शनीयतिलक इति, यद्यपि पक्षिणो मुनयो न तेषां गीतादिना भगवद्भावो भवति किन्तु स्वभावत एव तथापि लोकदृष्ट्या कदाचिदन्यथाबुद्धिर्भवेदतो रूपनादाभ्यां तेषां भजनसिद्धिर्निरूप्यते, तत्र रूपं वर्णयति दर्शनीयतिलक इति, दर्शनीयानां मध्ये तिलकरूपोतिसुन्दरः, पक्षिणश्च रूपप्रधाना रूपभेदविदः, किञ्च यो वेणुनादः स स्वहितकारी, स्वकीयानामपराधमपि न मन्यते, तदाह, वनमालादिव्यगन्धतुलसीमधुमत्तैरलिकुलैः कृतमलघुगीतमप्याद्रियन्नादरं कुर्वन्नेव कूजितवेणुर्यः, यथैव भ्रमरा झङ्कारं कुर्वन्ति तथैव तन्नादमनुकुर्वन्नेवानुरणनवदेव वेणुनादं करोति, पक्षिणां मध्येलयो हीना निकृष्टाश्च तेषामपि कुलानि समूहा नानाविधजातिभेदास्तैरप्यलघु यथा भवति तथा गीतं तस्याप्यादरं कुर्वन्, तत्राप्यलयो मत्ताः, मदोपि येनानुचितः, न हि तुलसी पुष्पान्तरवन्मदहेतुः, तत्रापि दिव्यगन्धा तत्रापि भगवद्वनमालागता, तेषामप्यादरं चेत् कुर्यात् तदा सरोवरादिषु ये सरसा रसिकाः क्षीरनीरविवेकिनश्च तेषामादरं कथं न कुर्यादिति, वनमालाया या दिव्यगन्धतुलसी तस्या मकरन्देन मत्तैः, किञ्चादरोपि भ्रमराणां यथाभीष्टं भवति तथा, वनमालायां समागतान् भ्रमरान् न दूरीकरोति किन्तु ते यथा नोपद्रुता भवन्ति तथैवादरं करोति, अतो यर्ह्येवादरं

१. पूर्वमहरितानामपि तदा हरितत्वं पूर्वस्मात् स्थौल्यं प्रत्यवयवमुच्छूनत्वं प्रभाविशेषश्चात्र प्रेमहृष्टतनुत्वं, अपरं च वेणुनादनिधिसुधास्वादवत्यः स्वामिन्य इति तद्धर्मं परिचिन्वन्ति ता एवेति तदुक्तावन्यविचाराक्षमत्वं युक्ततरमिति नाधिकं लेखनीयमत्र।

२. इदं क्वचित् पुस्तकेषु भिन्नान्तः संश्लिष्टं श्रीमत्प्रभुचरणानां स्वाक्षरम्।

कुर्वन्नेव कूजितवेणुस्तदैव सरसि विद्यमाना जलवासिनः सारसाः सरसानां भक्तानां सम्बन्धिनो हंसाः क्षीरनीरविवेकिनस्ते च विहङ्गा उत्कृष्टगतियुक्ताः, पुरुषापेक्षया ते पुनर्भगवद्भजनाधिकारिण इति तान् विशिनष्टि चारुगीतहृतचेतस इति, चारु यथा भवति निःकामार्थं भगवद्गीतेनैव हृतं वशीकृतं चित्तं येषां, तदपि भजनं भक्तिमार्गानुसारेण न तु स्थानस्थितानामन्तर्यामिरूपे ज्ञानरूपे वा, तदाह, एत्यागत्य हरिमुप समीपे सेवमाना जाताः, यतस्ते भगवदुक्ता मुनयः, भजने भ्रमराद् विशेषमाह यतचित्ता इति, यतं नियतं चित्तं येषां, चित्तनैयत्येन भगवद्भजनं मुख्यं न तु विक्षिप्तचित्ततया, किञ्च हन्त इति हर्षे, एतद् भाग्यमेतेषामेव भवतीति, बहिर्व्यापाररहिता भजने सर्वोत्तमाः, बहिर्व्यापारेषु च नेत्रे वाक् च नियम्याः, यस्तद् द्वयं नियच्छति वाङ् नान्यं वदति चक्षुश्च नान्यत् पश्यति, तदाह मीलितदृशो धृतमौना इति, मीलिता दृग् येषां धृतं मौनं व्रतं यैः, साम्प्रतमेते नादपरा अतो दृष्ट्यान्यचित्तता भविष्यतीति नेत्रनिमीलनं, एवमेतेषां भाग्यं सात्त्विकत्वान्निरूपितवत्यः ॥ १० ॥ ११ ॥

१. अथ वा दर्शनीयतिलक इति, इदमत्राकूतं, अतिरसिका एते मुनयः, स्वस्य पुरुषत्वेन लीलायामनुपयोगं मत्वा पक्षीभूय विविधस्वकूजनैर्भगवतो भक्तानां च रसोद्दीपनं कुर्वन्तः स्वकृतार्थतां मन्वानाः शब्दमेवाधिकमभीष्टं मन्यन्तेतः शब्दप्रधानकीर्तिरूपवनमालाधर्माणामेवात्रोपयोग उच्यते, 'यथा वृक्षस्य सम्पुष्पितस्य दूराद् गन्धो वात्येवं पुण्यकर्मणो दूराद् गन्धो वाती'तिश्रुत्या कीर्तेर्गन्धसाम्येन निरूपणं कृतं, वनमालायाः कीर्तिरूपत्वात् तन्निरूपकाणि गीतान्यावश्यकानि, तानि च तद्रसास्वादं विना न सम्भवन्त्यतो गुणातीतभक्तिरूपवक्ष्यमाणरूपगन्धवती तुलसी तन्मध्यस्थत्यलौकिकभक्तिरसात्मकमितरविस्मारकमतोतिमत्ताः स्वदेहाद्यनुसन्धानरहिता ईश्वरधर्माननुसन्धाना अपीति तन्निकट एवालघु गायन्ति, वस्तुतस्त्विदमेव महत्तमं समाराधनं प्रभोरलिभिः क्रियते, अत एव प्रभोरभित इष्टं तदेव गीतं, अपरध चार्वादिपदानि विहाय तत्र भवनार्थकप्रत्ययवत्पदोक्त्या भगवद्वनमालास्थतुलसीगन्धस्य दिविभवत्वस्य बाधितत्वादग्रे स्वामिनीषु 'व्रजदेवी'त्वस्य वक्ष्यमाणत्वाद् दिवुधातोः क्रीडावाचकत्वाच्च स्वामिनीभिः सह क्रीडाजनितोयं गन्ध इति समभिव्याहारादवगम्यते, एतेन यथा दिविभवोर्थो नेतरलोकस्थजनविषयस्तथायमन्तरङ्गतमलीलाप्रपञ्चस्थभक्तैकगम्य इति ध्वन्यते, अत एव प्रभोरपि भावोद्बोधकत्वेनासीदितिज्ञापनाय कूजनमुक्तं, किञ्च वनमालास्थपुष्पमध्वनुक्त्वा तुलस्या एव तद् यदुक्तं दयितगन्धतुलस्या इतिवाक्याद् 'बाहुं प्रियांस' इत्युपक्रम्य 'तुलसिकालिकुलैर्मदान्धैरन्वीयमान' इतिवाक्याच्च तद्गन्धमध्वादिस्वरूपं प्रभुरेव वेत्तीति नान्यगम्यः स विशेषः, तद्भ्रांकारोलयोपि न साधारणाः किन्त्वितरेभ्यो विजातीया अत्युत्तमा इतिज्ञापनार्थमेव कुलपदमुक्तमत एवालिपदमुक्तं, अलंशब्दो हि पूर्णतावाची तथा च तद्वानलिरित्यत्रोच्यते, रसो 'न लीयते न नश्यति यत्र येन वा सोलि'रित्युच्यते, यद्यप्यत्र दीर्घः सम्भवति तथापि 'दशहूतो ह वै नामैष तं वा एतं दशहूतं सन्तं दशहोतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवा' इतिश्रुतिन्यायेन 'परोक्षं च मम प्रिय'मितिभगवद्वाक्याच्च स्वप्रियार्थस्य गोपनं प्रभोः प्रियमिति ज्ञायते, प्रकृते च स्वान्तरङ्गरसपोषकतैतेषु गोप्येति परोक्षेण ह्रस्वान्तं पदं प्रभुः प्रकटितवान्, एवं सत्येत एवालयोन्ये तु भ्रमरा एव, क्वचिदेतेष्वप्यन्यनामप्रयोगस्तात्पर्यविशेषेणेति ज्ञेयं, तारत्वं बहुत्वं चानुक्त्वा लघुत्वाभाव एव य उक्तस्तेन तद्गीतरसभरं वोढुं नान्यः शक्तः प्रभुं विनेति ज्ञाप्यते, महत्त्व इयत्ता नास्त्येवेत्यपि ज्ञापनाय तथोक्तिः, एवं सति तदादरं कथं न कुर्यात्? यर्हीतिपदात् तद्गीतरसपानपरवशश्चिरं तूष्णीमेव तिष्ठति कदाचित् तद्रसभरेणैव कूजितवेणुर्भवतीति ज्ञाप्यते, अग्रे गीतोक्त्या पूर्वं तद्गीतोद्बुद्धभावेन स्वप्रियाणां भावोद्बोधनाय तथैवाकरोत् ततो यदा पूर्णरसोभूत् तदा जगाविति ज्ञाप्यते, अतिसुन्दरत्वनिरूपणे तिलकत्वोक्त्या तद् यथा भाग्यस्थाने भाले तिष्ठति तथेदमपि स्वरूपं परमभाग्यवतीष्वेव तिष्ठतीति ध्वन्यते, अत्र कर्मधारयो ज्ञेयः स्वामिनीनां हृदि प्रियातिरिक्ते दर्शनीयत्वास्फूर्तेः, अत्र यद्यप्युभयं मुख्यं तथापि नादे विशेषो निरूप्यतेन्यथा मीलितदृक्त्वं नोच्येत, तत्र हेतुः सरसि विद्यमानैरेव तैर्वेणुगीतं श्रुतं तच्च चारुत्वेन मनोहरणैकस्वभावमतो नादाधीना निकटे समागताः, आदावेव नादहेतुभूतस्वरूपसौन्दर्यनिरूपणान्नादरस एव स्वरूपरसमप्यनुभवन्तीति ज्ञाप्यते, इदमप्यतिचित्रं यन् मत्तानां गीतानुरणनरूपेण गीतेन यतचित्तत्वं सर्वेन्द्रियवृत्तिनिरोधश्चेति, एतेषामियं गीतरसपानदशैवम्भूतैवोपपद्यतेपि, एतत्तन्मयत्वेनैतदुत्तरकालीनत्वान्नादस्य, अलिकुलानामपि तुलसीगन्धमधुपानदशा पक्षितुल्यैव, पश्चात् तत्स्वभाववशादुत्करूपत्वं परमिति ज्ञायते, मुनित्वात् पक्षिणामग्रेप्यन्तरेव निरन्तरमेतद्रसममतैवेति न मत्ततोक्ता, अथ वा प्रभुरधस्वभावादनुक्तसिद्धैवाभिप्रा सेति नोक्ता, यदैवेषामप्यलिकुलवद् दशा भविष्यति, वस्तुतस्तूत्करूपरसमत्तालिकुलालघुर्गीतमभीष्टत्वेनाविचित्तनैयत्येनैवानुभवन् प्रभुर्वेणुकूजनगाने करोतीति तच्छ्रवणे पक्षिणामपि तथात्वमेवोचिततरतामावश्यकत्वादिति युक्तमुत्पश्यामः, तथाप्यादौ स्वरूपसौन्दर्यमेवोक्तमिति स्वस्य तद्दिदृक्षातिशयं पक्षिणां तत्प्राप्तिदशा तत्प्रतिबन्धसरणेन कश्चित् खेदोभूदिति हन्तेरयुक्तम् ॥

२. इदं क्वचित् सुबोधिन्यन्तः संश्लिष्टं श्रीमत्प्रभुचरणानां स्वतन्त्रम्।

सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ।
हर्षयन् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥ १२ ॥
महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः ।
सुहृदमभ्यवर्षत् सुमनोभिश्छायया च विदधत् प्रतपत्रम् ॥ १३ ॥
विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः ।
तव सुतः सति यदाधरविम्बे दत्तवेणुरनयत् स्वरजातीः ॥ १४ ॥
सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः ।
कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥

मेघः सर्वहितकारी तस्यापि वेणुनादजनितभावमाह पूर्ववत् सहबल इति द्वाभ्यां, हे व्रजदेव्यो गोप्यो व्रजदेवतारूपाः, अनेन विश्वासो भविष्यतीति निरूपितं, यर्हि वेणुरवेण विश्वमुपरम्भति पूरयति तर्हि महदतिक्रमेण शङ्कितचेताः सुहृदं भगवन्तमभ्यवर्षत् स्वदेहच्छायया चातपत्रं विदधज्जातः, तद् वा कुर्वन्नभ्यवर्षत्, अयं नादो महानलयुक्तो विश्वगतान् सर्वानेव धर्मान् दूरीकृत्य स्वयमेव पूर्णः, तदाभासरूपोपि मेघो धूमादिसमूहात्मा विश्वं भगवतैव कृतार्थीभूतमिति स्वयमुपचरितार्थोपि स्वजन्मसाफल्याय भगवन्तमेव ववर्ष, तत्र यादृशेन वेणुनादेनैतद् भवति तादृशकर्तारं भगवन्तं वर्णयति विशेषणचतुष्टयेन, अन्यथा उपरम्भणमर्थवादरूपं स्यात्, तत्र क्रियाशक्तिः सम्पूर्णेति वक्तुं सहबलो बलभद्रसहित इत्युक्तं सृष्टिकरणक्रियापेक्षयापीयं महती क्रियेति ज्ञापयितुं, स्रग्रूपो योयमवतंसः कर्णाभरणं तत्र विलासो यस्येति लीला निरूपिता, माला कीर्तिमयी दश दिशः श्रोत्रं, कीर्तिर्दिक्षु पूरिता यया सा भवत्येव सर्वोत्तमा, भगवत्कीर्तिप्रतिपादकं वा भागवतादिशास्त्रं सर्ववेदेष्वाभरणरूपं, तत्र विलासयुक्ता तत्प्रतिपादिका च, एवं क्रियायाः स्वरूपतो गुणतश्च माहात्म्यं निरूपितं, तस्याः सहकारिण्या इच्छाया माहात्म्यमाह स्वयं जातहर्षः सर्वमेव च हर्षयन्निति, एवं वेणुनादस्य कारणभूतक्रियोत्कर्षमुक्त्वा देशतोप्युत्कर्षमाह क्षितिभृतः सानुष्विति, सर्वाधारभूतां पृथिवीं ये बिभ्रति तेषामप्युच्चस्थानेषु स नादो जायत इति कथं न विश्वं पूरयेत्?, रवोनुरणनमतिगम्भीर-मुपरम्भति नादेन पूरयतीति मेघादप्यधिका क्रिया निरूपिता, तदैव मेघो महतो वासुदेवस्योपरि गच्छन् भगवदतिक्रमेण शङ्कितचित्तो भूत्वोपर्येव तिष्ठन्नग्रे गमनार्थमुद्यतो नीलमेघश्यामं विश्वजीवनं भगवन्तं स्वमित्रं ज्ञात्वा सुहृदमभ्यवर्षत् सुमनोभिः पुष्परूपैः स्वबिन्दुभिः, अर्थात् पुष्पैः पूजितवान्, न केवलं पूजामेव कृतवान् किन्तु राज्यमपि दत्तवानित्याहातपत्रं दधदिति, न केवलं राज्यमेव दत्तवान् किन्त्वात्मनिवेदनमपि कृतवानित्याहच्छाययेति, सूर्याधः स्थित उपरिस्थितेन न छाया भवतीति पृथक् छायानिर्देशः ॥ १२ ॥ १३ ॥

उत्तमांस्त्रिविधान् वक्तुं तेषामपि वेणुनादेन किञ्चिज् जातमिति वक्तुं वेणुनादं वर्णयति भगवन्तं च विविधगोपचरणेष्वित्युग्मत्रयेण, सन्देहो मोहः सर्वपरित्यागश्च ज्ञानिनां श्रुतीनामरण्यवासिनां वेणुनादेन कृतः, तत्र ये विश्वगुरवो ब्रह्मादयस्तेषामपि सन्देहार्थं भगवतो वेणुनादं वर्णयति विविधेति, लोके जायमानो लौकिकप्रकारः सन्देहमुत्पादयति, ननु न तद् रूपमीश्वरे यन्न वेदे श्रुतमस्तीति सर्वविद्यास्थानानां ब्रह्माभिज्ञ इति कथं तस्य सन्देह इत्याशङ्क्याह वेणुनाद उरुधा निजशिक्षा इति, सुशिरभेदो वेणुस्तस्यापि प्रकाराः शास्त्रे निरूपितास्ते ब्रह्मणा ज्ञायन्त एते तु प्रकारा उरुधानेकधा निजशिक्षा निजेनैव शिक्षा शिक्षणमभिव्यक्तिप्रकारा यासु, अनेन नादब्रह्म नित्यमिति निरूपितं, तत्र क्रियाशक्तिः साधनमिति तस्य लौकिकत्वे कथं नादोलौकिको भविष्यतीत्याशङ्क्य तस्याप्यलौकिकत्वायाह विविधेषु गोपचरणेषु गोपानां सञ्चारविशेषेषु

निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः शमयन् खुरतोदं वर्ष्मधुर्यगतिरीरितवेणुः ॥ १६ ॥
व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ।
कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥ १७ ॥

विदग्ध इति, गोपसञ्चारा न वेदोक्ताः किन्तु लौकिकाः, ब्रह्माण्डान्तरस्थिता अपि भवन्ति ते न लोकेन्यत्र प्रसिद्धा नापि वेदे, भगवांस्तु सर्वत्रैव विदग्धोतोयं ब्रह्मा यं प्रकारं न जानाति तमेव प्रकारं कृतवान्, ननु ब्रह्मसृष्टावाविर्भूतः कथं ब्रह्मणोप्यज्ञातं करोतीति चेत् तत्राह तव सुत इति, यशोदां प्रति वदन्ति स्त्रीमण्डले समागतामत एवात्र न कामादिवार्ता किन्त्वनिषिद्ध एवोत्कर्षो निरूपितः, यथा तव पुत्रोपि संसद्य मनसाप्याकलयितुमशक्यं करोति तथा ब्रह्मणोपि ब्रह्माण्डे जातः, सतीतिसम्बोधनं विश्वासार्थं, अज्ञाने हेतुमाहुरधरबिम्बे दत्तवेणुरिति, लोभात्मकोधर इति पूर्वमुक्तमतो न लोके प्रसिद्धः, तस्य रसो भगवता न दत्त इति, तत्रापि बिम्बरूपः सूर्यवत् प्रकाशकः, न हि प्रकाश्याः प्रकाशकस्वरूपं विदुः, तत्र च स वेणुः स्थापितस्ततोप्युत्तमत्वख्यापनाय, स्वरजातीः षड्जादिस्वरजातिभेदान्, अनयन्नूतनत्वेनोत्पादितवान् यर्हि तदा तत्परिज्ञानार्थं त्रिगुणप्रधाना अपि देवाः कालत्रयेपि समागत्य सोपि काल आधिदैविक इति ख्यापयितुं सवनपदं, तं वेणुनादं सवनशः उपधार्य शक्रः सात्त्विकः शर्वस्तामसः परमेष्ठी राजस इति ते पुरोगमा येषां देवानां, सर्व एव देवास्त्रिगुणात्मका भवन्ति कवयो निपुणा अपि नादे,इन्द्रो हि त्रैलोक्याधिपतिः सर्वदा नादपरः शर्वस्तु नादशास्त्रकर्ता परमेष्ठी तयोरपि गुरुरत एव परमेष्ठिपदं, तेषामन्यचित्तताभावायाहानतकन्धरचित्ता इति, आसमन्तान्नता कन्धरा बाह्याभिनयार्थं चित्तं च येषां, ग्राहकं चित्तं, नमनमत्र सर्वतः, तेप्यनिश्चिततत्त्वा जाताः, नाप्यौदासीन्येन कियत्कालं विचार्याज्ञाने तूष्णीम्भूता इति मन्तव्यं यतः कश्मलं ययुः, चिन्तया मूर्च्छिताश्च जाताः, वेणुनादेन वा मोहिताः, अत एव आभासत्वपक्षोपि निराकृतोलौकिकरसोत्पादकत्वात् ॥ १४ ॥ १५ ॥

अस्त्वन्येषां वार्ता वेणुनादोस्माकमेवान्यथात्वं सम्पादयतीत्याहुर्द्वयेन पूर्ववत् निजपदाब्जदलैरिति, यर्हीरितवेणुः सन् व्रजति तदा तेन नादेन कुजगतिं स्थावरत्वं गमिता वयं गोप्यः सर्वा एव कश्मलेन मूर्च्छया वसनं परिहितं केशपाशं वा न विदाम इतिसम्बन्धः, अयं वेणुनादोस्मदर्थमेव जायत इति तस्य चेष्टयानुभवाच्च ज्ञायते, तत्र चेष्टया गोकुलनिवासिनामेवार्थे जायते तथा व्याप्तः कथमन्यकार्यं कुर्यात्? अतः प्रथमं भगवतो गोकुलहितकर्तृत्वमाहुर्निजस्य स्वस्यैव यत् पदाब्जद्वयं तस्य दलैर्दशाङ्गुलीभिस्तलभागैर्वा व्रजभुवो निरन्तरं पश्वाक्रमणेन जातव्यथाया व्रजभूमेः खुरैर्जातं तोदं शमयन्निति शनैःशनैर्लीलया भगवद्गतिर्निरूपिता,क्षतांशो गतिविलासेन पादस्पर्शेन निराकृतः,आध्यात्मिकांशस्तु ध्वजादिना, तामसो भौतिको ध्वजेन निराक्रियते, राजस आध्यात्मिको वज्रेण सात्त्विक आधिदैविको नीरजाङ्कुशचिह्नेन, तान्येव विचित्राणि ललामानि पदेषु,तेन लौकिकालौकिकप्रकारेण व्रजभुवः खुरतोदप्रशमनं, व्रजे तिस्रः प्रधानभूता भूमिर्गावो गोप्य इति, तत्र भूमेर्दुःखनिवृत्तिं गत्या निरूप्य गत्या कृत्या च गवां दुःखं निवारयतीत्याह वर्ष्मधुर्यगतिरिति, वर्ष्मधुर्यो महावृषभः ककुद्मी स यथा लीलया मन्थरगतिस्तथा गच्छन् गवामपि दुःखहारीव निरूपितः, ईरितवेणुर्व्रजतीति, गोपिकानां तदास्माकं वेणुनादेन जाते कामे स्थावरत्वमधिकं जातमित्याहुस्तेनेति, स्वभावत एव वेणुनादेन जातः कामस्तत्रापि सविलासवीक्षणेनार्पितो मनोभववेगो यासु, अतो वेगेन स्तम्भे जाते

१. ०ङ्कुश० ।

मणिधरः क्वचिदागणयन् गा मालया दयितगन्धतुलस्याः ।
प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्र ॥ १८ ॥
क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वासत कृष्णगृहिण्यः ।
गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥
कुन्ददामकृतकौतुकवेशो गोपगोधनवृतो यमुनायाम् ।
नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २० ॥

कुजगतिं वृक्षगतिं गमिता जाताः,तेषामन्तर्ज्ञानमस्तीति तदर्थमाहुर्न विदाम इति, सुगुप्तावपि न जानन्तीति तद्व्याप्त्यर्थमाह कश्मलेनेति, कश्मलेन मूर्च्छया, स्त्रीणामत्यावश्यकं वसनज्ञानं कबरज्ञानं च,वेणुनादप्रस्ताव एवैतज् जातमिति गतिदृष्ट्यादिभिरपि कृतमत्र निरूप्यते ॥१६॥१७॥

हरिणीनां वेणुनादेन यथा जातं तद् वक्तुं पूर्ववद् वेणुनादं वर्णयन्ति **मणिधर** इति द्वाभ्यां,गवामाधिदैविकानि रूपाणि मणयस्तान् स्वस्मिन् बिभर्तीति **मणिधरः**, अभिज्ञानार्थं वा, स्वप्रियाणामभिज्ञापका मणयोतस्तैः कदाचिद् गा आसमन्ताद् गणयन् जातः,अनेन तास्तद्गत-धर्माश्च भगवत्येव प्रतिष्ठिता इति तासां संसाराभावः सूचितः, अत एव गोपिकानामपि, अत एव हरिणीनामपि,पशुत्वाविशेषाद् ग्राम्याणां चेदुद्धारको विशेषत आरण्यानां भविष्यतीति युक्ता कृष्णपरता, **मालया दयितगन्धतुलस्योपलक्षितः**, यथा भगवतो नीलं रूपं प्रियं स्पर्शः स्त्रीणां शब्दो वेणो रसो नवनीतस्य तथा गन्धस्तुलस्याः,तद्गतोत्तमता सात्त्विकानां केषाञ्चिदनुभवसिद्धा, तादृशी तुलस्यतस्तस्या मालां बिभर्ति, अतो यदा वयमपि प्रिया भविष्यामस्तदास्मानप्यस्म-द्धर्मान् वा धारयिष्यतीति कृष्णसारस्त्रीणां प्रवृत्तिः, कृष्णसारस्तु वेदे नियुक्त इति भक्तौ तासां विनियोगार्थं प्रवृत्तिः,किञ्च **प्रणयिनोतिप्रेमवतोऽनुचरस्य गोपस्यांसे भुजं प्रक्षिपन्निति** कदा कदाचिद् 'आशंसायां भूतवच्चे'ति वा कदागायतेति मध्ये गानाशंसा, यथा गोपालस्य तथा स्नेहसेवाधर्मयोः सद्भाव एवं भविष्यतीति गोपिकानामिव हरिणीनामपि तथात्वाय स्नेहभजनं, देहास्फुरणान्न विजातीयत्वेन कामाभावः, तदैव क्वणितो यो वेणुराकस्मिकः शब्दविशेषो मनोहारी क्वणनात्मकः स चेद् वेणोर्निर्गतस्तत्सम्बन्धादन्योपि शब्दाश्चित्तवञ्चका इति **रव**पदं, शब्देन मृगाणां वशीकरणं सिद्धमेव,इदानीमेवोपयोगो भविष्यतीति प्रतीतिजननाद् वञ्चकत्वं,अतो **रवेण वञ्चितचित्ताः कृष्णमन्वासत** कृष्णसमीप आसत उपविष्टा जाताः, यथा प्रायमुप-विशत्येवं कृष्णमनूपविष्टाः, ननु स्त्रियोऽन्यस्य कथमन्यस्य गृहेऽन्यस्य समीप उपविष्टा इति, तत्राह **कृष्णस्य कृष्णसारस्य गृहिण्य** इति,तास्तस्य गृहिण्यो जाताः,वञ्चितचित्तत्वाद् वा रूपं विस्मृत्य शब्दमात्राभिनिविष्टा जाताः, वेणुनादेन वा सानुभावेन कृष्णसारेपि कृष्णमत्या कृष्णमेवा-न्वासत, ननु कृष्णसारेपि कृष्णभ्रमाच्छब्दोपि वर्तत इति तं परित्यज्य कथमागता इत्यत आह [illegible] नौ, अतो यत्रैव भगवान् गच्छति तत्रैव तमनुगत्य [illegible] गमिष्याम इत्याशामपि त्यक्तवत्यः ॥१८॥१९॥

एवं नवप्रकारेण वेणुनादं निरूप्य गुणातीतप्रकारेण त्रिधा निरूपयन् वेणुनादेन भगवान् जगदेव वशीकृतवानित्याह **कुन्ददामे**तिद्वाभ्यां,यर्हि भगवान् **यमुनायां विजहार**, तत्रापि पूर्वोत्तरदशायामपेक्षितो वेणुनादः परिगृह्यते प्रकरणित्वात् प्रकारविशेषाभावाच्च न पृथगुक्तः,

१. रसानुभवेनेत्यपि पाठः ।

२. सान्निध्येन भगवद्रसः पीत इति लब्धसानुभावा गोपिका इव तदेकपरा जाताः,एतन्नयनेषु स्वप्रियानयनसादृश्यदर्शनेन यादृशेन भावेन ताः पश्यति तादृशेनैवैता अपि पश्यन्तीत्येतासामपि तत्सजातीयभावोत्पत्तिस्तथैव वेणुक्वणनं चात एवाभि-मीजामृतमीजात्मकं रवपदमुक्तं, अतस्तच्छ्रवणेत्यार्तिस्वतापशमनं च सम्पद्यते, अतः सदृष्टान्तोक्तिरुक्ता ।

३. इदं क्वचित् सुबोधिन्यन्तः संश्लिष्टं श्रीमत्प्रभुचरणानां सतत्त्वम् ।

मन्दवायुरुपवात्यनुकूलं मानयन् मलयजस्पर्शेन ।
वन्दिनस्तमुपदेवगणा ये वाद्यगीतवलिभिः परिवव्रुः ॥ २१ ॥
वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः ।
कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्तिः ॥ २२ ॥
उत्सवं श्रमरुचापि दृशीनामुन्नयन् खुररजश्छुरितस्रक् ।
दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥

तदोपदेवगणाः परिवव्रुरितिसम्बन्धः, यमुनायामिति सामीप्यसप्तमी, अधिकरणसप्तमी वा, घर्मे गवां गोपालानां च जले स्थितिः सम्भवति, तत्र विहारो गोपैः सह जलक्रीडा गवां प्रक्षालनादिः, सर्वत्रोद्वेगशान्त्यर्थं वेणुनादः सहकारी, तदानीमनलङ्कृतत्वमाशङ्क्यालङ्कारमाह कुन्ददामेति, वस्त्राभरणाद्यलङ्कारा भविष्यन्त्येव पुष्पालङ्कारा न भविष्यन्तीत्याशङ्क्य तदेव निरूप्यते, कुन्ददाम्ना कृतः कौतुकवेशो यस्य, दामान्यनेकप्रकाराणि तैस्तथा वेशो निर्मीयते यथात्यद्भुतो भवति,अत्र तु यथैव हास्यरस उत्पद्यते तथैव निर्मीयत इति, नन्वेतादृशीं प्राकृतलीलां भगवान् कथं कृतवानित्याशङ्कायामाहुर्नन्दसूनुस्तव वत्स इति, यया लीलया नन्दपुत्रो भवति तयैव लीलया प्राकृतलीलामपि सम्पादयति,अनघ इतिसम्बोधनं क्रोधाभावाय विश्वासार्थं च, तव च वत्सो जातः, अनेन त्वं गोरूपेति सर्वगुप्तरसानभिज्ञत्वं सूचितं, अन्यथा उलूखलबन्धनलीलां न कुर्यात्, मध्ये निर्दोषत्वेन सम्बोधनादुभयोर्निर्दोषत्वं ज्ञाप्यते, तादृश्या वत्सत्वेन भगवत्यपि तथा, पूर्णगुणत्वलक्षणमाधिक्यं चोच्यतेऽग्रिमविशेषणेन, किञ्च प्रणयिनां नर्मदः, ये केचन स्नेहयुक्ता यथैव ते स्निग्धा भवन्ति तथैव लीलां करोतीति, अनेन सर्वत्रैव हेतुरुक्तः, यत्रैव लीलासक्त्या क्रीडा स विहारः सोऽत्र जलक्रीडा नृत्यक्रीडा वेणुवादनक्रीडा च ज्ञेया,अन्यथा वाद्यादीनामुपयोगो न स्यात्,विद्यावन्तो हि वशीकर्तव्याः,तत्र विद्योत्पादको वायुर्देवाश्च तदाधारभूताः, तत्राप्युपदेवगणा वन्दिनश्च बहिर्विद्याप्रकटनपराः, अतोऽन्यापेक्षया तेषु विशेष उक्तः, प्रथमतः कारणभूतं वायुं निरूपयन्ति मन्दो वायुरनुकूलं यथा भवति तथोपवातीति, अनुकूलं कूलसमीपे हितं च, अनेन शैत्यं निरूपितं, मलयजस्पर्शेन सहित इति सौरभ्यं, अनेन दाक्षिणात्योऽयं वायुरिति निरूपितं, भगवत्स्वरूपे दत्तेन वा मलयजेन सहभावादधिकशैत्यनिरूपकत्वेन अनुकूलत्वं, मलयजस्पर्शो मलयजस्येव वा स्पर्शः, तथा सति तत्रत्यानां सर्वेषामेव भगवद्भावं सम्पादयिष्यतीति, मानयन्निति,स्वकीयैस्त्रिभिर्गुणैर्यथैव सन्माननं भवति तथैव वातीत्यतिवश्यता, उपदेवगणाश्च गन्धर्वादयश्च वन्दिनः कीर्तिनिरूपका जाताः, गायकाश्च सन्तः, य इति भगवदीयाः, वाद्यगीतपूजासाधनैस्तामसराजससात्त्विकैः सहिताः परिवव्रुः, सर्वत्रैवापेक्षितं कृतवन्तः ॥ २० ॥ २१ ॥

एवं गुणातीते प्रकीर्णतां निरूप्य युगलद्वयेन केवलं भगवत एव चरित्रमाहुर्वत्सल इति, भगवान् यद् गोकुलं गोष्ठे समानयति तत् कृपया, अन्यथा एकस्यामपि लीलायां व्यापृता गावो म्रियेरंस्तथा गोपिकाः,परं कृपयैव भजनानन्दानुभवार्थं तथा करोति, अत्र हेतुर्यदगध्र इति, यद् यस्मात् कारणादगं पर्वतं धारयतीति, यदि भजनानन्दं न दद्यात् तदा गोवर्धनोद्धरणं न कुर्यात्,एतद् भगवन्माहात्म्यं सर्वजनीनमिति ज्ञापयितुमाह पथि वृद्धैर्वन्द्यमानचरण इति, वृद्धाः सर्वतो निपुणाः, बहुज्ञैरेव भगवान् सेव्यो भवति, अतः कृत्स्नमेव गोधनमुपोह्य ततः पृथक्कृत्य, उप समीपे समाहृत्य वा, दिनान्त इति, अग्रे वनस्थितेरयुक्तत्वाल्लीलान्तरस्य च चिकीर्षितत्वात्, गीतवेणुर्जातः श्रमापनोदनार्थं व्रजस्थानां ज्ञापनार्थं च, अस्य नादस्याग्रे कार्यं

वक्तव्यं,गोपिका एव कृतार्थाः करोतीति न किन्तु गोपानपीति ज्ञापयितुं तत्कृतस्तोत्रमाहात्म्यं गेडित-कीर्तिरिति,अनुगैः सेवकैरीडिता कीर्तिर्यस्य,अनेन रात्रौ तेषामपि गानमुक्तं भवति यथा दिवसे गोपिकानामन्यथा सर्वेषां निरोधो न भवेत् ,एतादृशस्य कार्यं स्वयमेव जानातीति स्वयमेव करोतीत्या-हुरुत्सवमिति, श्रमरुचा व्रजस्थदृशामुत्सवमुन्नयन्नाशिषो दित्सयैतीतिसम्बन्धः, श्रम-युक्ता रुक् कान्तिः,भगवतः श्रमाभावपक्षे प्रदर्शनमात्रपरत्वं, अस्ति श्रम इतिसिद्धान्तः, 'भर्ता सन् भ्रियमाणो बिभर्ति' 'एको देवो बहुधा सन्निविष्टः' 'यदा भारं तन्द्रयते स भर्तुं निधाय भारं पुनरस्तमे-ती'तिश्रुतेः सर्वधर्माश्रयत्वाच्च, विरुद्धसर्वधर्माश्रयत्वादश्रान्तोपि, न तु केवलमश्रान्त एव, श्रमः सुखकारक इत्यपरे,तत्सम्बन्धिनी रुक् श्रमरुक्,सा नायकगता स्त्रीणां न हितकारिणी तथाप्यस्माकं हितकारिण्येव जातेत्याहुर्दृशीनामुत्सवमुन्नयन्निति, दृशिर्दर्शनं,यदि भगवान् श्रान्तो न भवेत् तदा शीघ्रं गच्छेत् तदा दृष्टीनां परमानन्दसन्ततिर्न स्यात्, ऊर्ध्वं नयन्निति सञ्जाते दृष्टीनां य आनन्दः स्थितो यावांस्तदपेक्षयाधिकं कृतवानित्यर्थः,भगवत्कीर्तेः सर्वपुरुषार्थदातृत्वाय प्रकारं वदन् श्रममुपपादयति खुररजश्छुरितस्रगिति, गोखुररजोभिश्छुरिता व्याप्ताः स्रजो माला यस्य, वायुवशादुद्गतो रेणुर्न स्थिरो नापि नियतः,खुरजातस्तु तथा, खुराणामेव गोत्वात् प्रकृतत्वाच्च न गोग्रहणं,'पशवो वा एकशफा' इत्यत्र तथा निर्णयात्, अनेन धर्मोयमिति निरूपितं रजोर्थो व्याप्तिः काम इति, आगमनस्य तु यत् कार्यं तदाहुः सुहृदां सर्वेषामेव सम्बन्धिनामाशिषः सर्वा एव देया इत्युक्तं गोपिकाद्वारा सर्वेष्वानन्दप्रवेश इति,एष इति प्रदर्श्याहुर्यतः स्वस्मिँल्लीला ज्ञापिता भवति, साधारण्येन सर्वेषां तापनाशकत्वाय भगवद्गतमसाधारणं धर्ममाहुर्देवकीजठरभूरुडुराज इति, अदितिर्देवकी 'अदितिर्द्यौरदितिरन्तरिक्ष'मिति श्रुतेरदित्यवतारत्वाद् द्युरूपा सा,तस्यामवश्यं चन्द्रो-दयोपेक्षित एव,सा पुनर्विशेषरूपं गृहीतवतीति चन्द्रोपि विशिष्टकार्यं करोति,लौकिकस्तापत्रिविधो भगवद्विरहजश्च, अयं [illegible] भवतीति

देवकीजठरभूः स [illegible] । देवक्यां

जातः परं सुखदोसाः [illegible] ॥२३॥

साधारणीं लीलामुक्त्वा गोपिकास्वेव वेणुकृतां भगवतैव जनितां लीलामाह मदेति,यदुपति-र्मुदितवक्त्र उपयातीति, पूर्वोक्ता एव वेणुनादा अत्र ग्राह्याः, दश लीलाः पूर्वं निरूपितास्ता

१. अथ वैता भगवद्विरहेणार्ता इति स्वाभिलषितप्रकारेण तदङ्गसङ्गव्यतिरेकेण नैतासामुत्सवो भवतीत्यार्ता एव स्थिताः परं दृशीनां दर्शनं मुख्यमिति तेनैवोत्सवोन्नयनमुच्यते, तथा चार्तानामस्माकं दृशीनामितिसमासो ज्ञेयः, आर्तशब्दस्य ह्रस्वोपि छान्दसः, न हि दृशीनामेवार्तत्वमत्र विवक्षितं, प्रकारान्तरेणापि तत्स्वरूपरसास्वादवत्यः स्वामिन्य इति सर्वेन्द्रियाणा-मेवार्तत्वसम्भवात्, तदैव सर्वेन्द्रोत्सवे पुनराशिषोनभीप्सितत्वेनाग्रे तद्दित्सोक्तिरप्यनुपपन्ना स्यात्, दृशीनामुत्सवो बहिरेव, अन्तरुत्सवस्य त्वधिकरणं मनः, तस्यातृप्तत्वाच्च स इदानीं परमग्रे सम्भोगसामयिकदर्शने भविष्यतीतिज्ञापनायोर्ध्वमित्युक्तं, यथा 'गोप्यो दिदृक्षितदृशोभ्यगमन् समेता' इत्यत्र दर्शनानन्तरमपि दृशां दिदृक्षितत्वमेवमत्रापि ज्ञेयं,अत एव दृशीनामिति-सम्बन्धषष्ठ्याप्युत्सवस्य तत्सम्बन्धित्वमेव प्राप्यते, तत्रापि भगवत्कर्तृकत्वयनोक्त्या तासां बहिरुत्सवोपि प्रियप्रापित इति तद्दर्शनस्वभावाच्च स्वत इति चोच्यते, अत एवोत्सवकरणत्वं श्रमरुचोपि युज्यते, अन्यथा चिरादुत्कण्ठितानामासां प्रियतमागत-श्रमनिरीक्षणेनाभिमरसप्रतिबन्धशङ्कया नोत्सवः स्यात् प्रत्युत पूर्वापेक्षयाधिकतरः खेद एव स्यात्,किञ्च विनास्माभिरन्येन प्रियः श्रमापनोदनं न कारयति वयमतः परं करिष्याम इति श्रमरुचस्तथात्वं युक्तमेव, श्रमस्य कान्तित्वनिरूपणेनापि स्वमनो-[illegible]

[illegible] रायत्वात्, अतो ज्ञायते सुहृदामस्माकमाशिषो दित्सयैतीति, एतीत्यागमनक्रियायां कर्मोनुक्त्वापि तथेति ज्ञाप्यते, अयं भावः,'कर्तुरभीप्सिततमं कर्म' भवति तेनात्र भगवत्कर्तृत्वात् तदभीप्सिततमत्वमस्माकमेव नान्यस्य,अन्यथा मजमेतीत्युक्तं [illegible]

[illegible] सर्वेषां तापहारको दूरादेव परं पतित्वेनातिनिकटे नक्षत्राणामेव तथायमपि सर्वेषां तथा दूरादेव परं पतित्वेनास्माकमेव तथेति भूयान् विशेषः सम्पद्यते स यथा नक्षत्रमण्डले तिष्ठंस्तैरेव राजमानः सर्वतापनिवर्तकस्तथायमप्यस्मन्मण्डले तिष्ठन्नस्माभिरेव राजमानस्तथेत्युडुराजपदेन द्योत्यते । २. इदं श्रीमत्प्रभुचरणानां स्वतन्त्रं क्वचित् पुस्तकेषु श्रीसुबोधिन्यन्तःसंश्लिष्टं दृश्यते ।

मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ।
बदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥ २४ ॥
यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ।
मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥ २५ ॥

श्रीशुक उवाच-एवं व्रजस्त्रियो राजन् कृष्णलीलानुगायतीः। रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महोदयाः॥२६॥

सर्वा असदर्थमेवेति दशधा भगवन्तं विशेषयन्ति, एक एव भगवानुभयत्रेति युगलत्वेपि नात्यन्तं विभागः, सर्वत्रैव वेणुनादे रजोगुणो मुख्य इति सोऽसदर्थं फलित इत्याहुर्मदेतु विघूर्णिते लोचने यस्येति, मदोत्र स्वानन्दस्थित्या पूर्णावबोधः स ज्ञानमार्ग एवेति प्रकटयिन सर्वविषयान् व्यावर्तयितुं विघूर्णितलोचनत्वमुक्तं,अयं धर्मो भगवन्निष्ठो निरूपितः,स्वरूपस्थित्यर्थं तादृशोपीषन्मानदः,मानं प्रयच्छति सन्माननां करोति तेनास्माकं गम्यो भवतीति ज्ञायते,मानमभिमानं वा रजोगुणप्राकट्यात् प्रयच्छति खण्डयति वा ज्ञानप्राकट्यात्, प्रयच्छति मानं द्यति खण्डयति त्रिष्वपीषदेव तत्तत् कार्यं, ननु पूर्णस्य भवतीष्वेवङ्करणे को हेतुः? तत्राहुः स्वसुहृदामिति, स्वपदादसाधारण्यं तेन स्वस्यैव सुहृदस्ताः, महतोपि सुहृत्कार्यं कर्तव्यमिति, साधारणं कार्यमाह वनमालीति,कीर्तिमयीं वनमालां प्रकटयतीति,बदरवत् पाण्डुवदन इति, बदरोत्र फलवाचकः, स हि घर्मेण प्रतिक्षणं विसदृशीं कान्तिं करोति, तत्राप्यर्धपक्वः पाण्डुवर्णो भवति, अग्रे त्वारक्तः, तथेदानीमधरतोग्रे त्वत्यन्तं रतो भविष्यतीतीषन्मानदत्वाद् विशेषः, साधनं कीर्तिरिति मध्ये विशेषणान्तरं, अथ वात्र पाण्डुशब्देनारक्त एव गुण उच्यते तदा वदनं वक्त्रमधरामृतपानं लक्षितं भवति, वनवासिनां वैतदुपभोग्यमिति वने गत्वैतदुपभोग्यमिति सर्वा ज्ञापयन्ति, ततोपि विशेषमाहुः कनककुण्डललक्ष्म्या मृदुगण्डं मण्डयन्निति,श्मश्रूद्गमाभावादानन्दनिधानत्वाच्च मृदुत्वं भोगार्थमुपपाद्यते गण्ड एव रससमाप्तिरिति, कनकपदं वर्णान्तरज्ञापनार्थं, उत्कृष्टेनापि परमानन्देनाप्यस्मदर्थं कामरस एवोद्बोध्यत इति सर्वथास्मदर्थमेव भगवदागमनमिति निश्चीयते, अन्यथा शिरोभेदानसत्समक्षं न कुर्यादिति, ननु यद्यपि महांस्तथापि बाल इति नन्दसूनुरिति कथमसाधारणीं लीलां करिष्यतीत्याशङ्कां वारयन्ति यदुपतिरिति, अयं यादवानां पतिस्ते हि बहुस्त्रीका भवन्ति, अमर्यादार्थं विशेषणान्तरमाहुर्द्विरदराजविहार इति, महासुरते गजेन्द्र इव महान्,तेन विना न पूर्तिरिति, तदपेक्षयाप्यादौ पूर्वतापं दूरीकरिष्यतीत्याहुर्यामिनीपतिरिवेति, सम्पूर्णाया यामिन्या अयं पतिः, अतस्तद्गतानां विशेषेण सुखदः, नन्वहर्पतिरपि कथमुच्यते यामिनीपतिरिवेति? तत्राहुरेष इति,सर्वालङ्कारभूतस्तत्र तिष्ठति,अधुना तु श्रान्त इव,दिनान्त एष यामिनीपतिरिव चन्द्र इव दूरादेव तापनाशकः साम्प्रतमग्रे तु यामिनीपतिरिवेमसमर्थं ज्ञापयतीति लक्ष्यते यतो मुदितवक्त्रः प्रसन्नवदनो भूत्वोपयाति समीपमागच्छति, अयं भावस्तासामेव हितकारीति पूर्वं साधारण्यमुक्तं, उपसंहारे पुनराह मोचयन् व्रजगवामिति, व्रजस्य गवां च सम्पूर्णे दिवसे यावांस्तापस्तं सर्वमेव मोचयतीति ॥२४॥२५॥

एवं निरोधं निरूप्य स्त्रीणामुपसंहरन् प्रकरणस्थानामेव तद्द्वारोपसंहरत्येवमिति,राजन्निति-सम्बोधनं विश्वासार्थं, व्रजगता अपि स्त्रिय एवम्प्रकारेणाहस्सु भगवत्सम्बन्धरहितदशायामपि कृष्णलीला एवानुपूर्व्येण बहुकालानुवृत्त्यर्थमनुगायतीरनुक्रमेण गायती रेमिरे,स्वत आनन्दरूपा कीर्तिस्ताः प्रति जातेति तासां क्रियाशक्तिर्ज्ञानशक्तिश्च भगवन्निष्ठैव जातेत्याह तन्मनस्कास्तच्चित्ता इति, चित्तं ज्ञानप्रधानं मनः कर्मप्रधानमिति, एवं सर्वप्रकारेण प्रपञ्चविस्मृतिर्भगवदासक्तिश्च निरूपिता,नन्वेवं कथं तासां निरोधः फलित इति तत्रोपपत्तिमाह महोदया इति, महानेवाभ्युदयो भाग्यराशिर्यासामिति सर्वं सुस्थम् ॥ २६ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे द्वात्रिंशाध्यायविवरणम् ३२

॥ समाप्तं तामसफलप्रकरणीयं श्रीयुगलगीतम् ॥ समाप्तं द्वितीयं तामसप्रकरणम् ॥

Printed at the Nirnaya Sagar Press, 26-28, Kolbhat Lane, Bombay.

अध्याय ३२.

# ॥ श्रीयुगलगीतनां श्रीसुबोधिनीजीनो अनुवाद ॥

**कारिकार्थ**-દ્વાત્રિંશ અધ્યાયમાં ગોપિકાના અન્તઃકરણમાં ગુણગાનને કરીને ભગવાન્ હરિએ સ્વાનન્દને પૂર્યો-જેણે જ કરીને હરિ પૂર્ણાનન્દ- એમ આ અધ્યાયે કહેવાય છે, યદ્યપિ આનન્દ તો સર્વત્ર જ અન્તઃ જ અનુભવાય છે. તથાપિ બાહ્ય રમણમાં શરીરના અને ચેષ્ટાના જ પ્રાધાન્યથી સ્વરૂપના મૂર્તત્વે તદાત્મક-સ્વરૂપાત્મક-આનન્દ પણ મૂર્ત હોવાથી શરીરેન્દ્રિયાદિમાં પણ સ્વરૂપતઃ સ્થાપિત આનન્દનો અનુભવ મને કરીને થાય છે, પરન્તુ પ્રકૃતમાં તો અન્તઃસઙ્ગે કરીને પ્રકટ આનન્દ બાહ્યરમણવત્ શરીરેન્દ્રિયાદિમાં ધર્મ હોય છે એ અભિપ્રાયે અત્ર "અન્તઃ"પદ કહ્યું, 'સ્વાનન્દને પૂર્યો એમ કહેવાય છે' એમ અત્ર વાક્યસમ્બન્ધ છે, 'ધર્મિસ્વરૂપવિરહજન્ય દુઃખનું નિવારણ ધર્મરૂપ ગુણગાનને કયે પ્રકારે સમ્ભવે ? અને તત્ર પણ સ્વરૂપવદ્ જ આનન્દપૂરણ કયે પ્રકારે સમ્ભવે ? એમ આશઙ્કીને "યેન" ઇત્યાદિ કહે છે, જેમ સ્વરૂપ પૂર્ણાનન્દાત્મક છે તેમ નામલીલા પણ પૂર્ણાનન્દાત્મિકા છે તેથી સર્વ ઉપપન્ન છે, આ પક્ષમાં ભગવાન્ રૂપતઃ અને નામતઃ એમ ઉભયતઃ પૂર્ણાનન્દ છે તેથી ધર્મરૂપ ગુણગાને પણ ધર્મિસ્વરૂપવિરહજન્યદુઃખનિવારણ અને તત્ર પણ સ્વરૂપવદ્ જ આનન્દપૂરણ સમ્ભવે છે, યદ્વા જે સ્વરૂપલક્ષણ હેતુએ પૂર્વે તેમ કર્યું હતું તે જ સ્વરૂપલક્ષણ હેતુ અન્તઃસ્થિત જ હોવાથી અત્યુદ્રેકે મુખકમલદ્વારા બહિર્નિર્ગત થયો અને અધુના પણ તે જ સ્વરૂપલક્ષણ હેતુએ તેમ કર્યું, આ પક્ષમાં 'યેન' પદનો અર્થ 'હેતુ' કરીને 'જે હેતુએ પઞ્ચાધ્યાયીમાં પૂર્ણાનન્દ કર્યો હતો તે જ સ્વરૂપલક્ષણ હેતુએ અધુના પણ ગોપિકાના અન્તઃ સ્વાનન્દ પૂર્યો' એમ અર્થ સિદ્ધ થયો, એનું જ વિવરણ 'અન્તઃપ્રવિષ્ટઃ' ઇત્યાદિએ કરે છે, સ્વાનન્દપૂરણને જ આ દ્વિતીયા કારિકાએ વિવરે છે કે અન્તઃપ્રવિષ્ટ ભગવાન્ ગુણગાને મુખથી ઉદ્ધરીને ગુણાનુવાદશ્રવણે પુનઃ કર્ણમાં જ્યારે સમ્યક્ નિવેશાય છે ત્યારે કર્ણદ્વારા સુસ્થિર થાય છે, યદ્વા જેમ જેમ ભગવાન્ ભક્તોની સ્વવિષયિકા આર્તિને દેખે છે તેમ તેમ ભગવાન્ મુદિત થાય છે, યદ્યપિ પરમકૃપાલુ ભગવાન્નું તે પ્રકારે સ્વભાવકથન અનુચિત છે તથાપિ તેમ જે કહ્યું તેનો આશય આ પ્રકારે છે, ભક્તવિષયક પરમ અનુરાગ હોવાથી પરોક્ષમાં તેમના હૃદયમાં સ્વસ્વરૂપપ્રકટને ગુણગાનશ્રવણાનન્દના અનુભવની ઇચ્છા ભગવાનને થાય છે અને તે ઇચ્છાની પૂર્તિ ત્યારે તેમની આર્તિએ જ થાય છે તેથી તાદૃશ આનન્દવિશેષે મુદિત થાય છે એવો ભગવાનનો સ્વભાવ છે એવી વસ્તુસ્થિતિએ-અને દિવસે વિરહજ આર્તિએ પૂર્ણા ગોપિકાના સાયંમિલને ભગવાનને જે રસ થાય છે તે રસ દિવસે સઙ્ગમે થતો નથી એવી પણ વસ્તુસ્થિતિએ-ભક્તોએ જે સ્વાનન્દે જ ભગવાનને પૂર્ણાનન્દ જાણ્યા તાદૃશ સ્વાનન્દને ભગવાને સ્વયં ગોપિકાના અન્તઃ પૂર્યો, આ તૃતીય પક્ષમાં 'પૂર્ણાનન્દત્વના અનુસન્ધાને સ્વાનન્દપૂરણહેતુરૂપ ગુણગાન નથી પરન્તુ ગુણગાન ભાવસ્વભાવથી છે તેથી ભાવસમ્બન્ધિ કાંઇક પ્રયોજન વક્તવ્ય છે' એમ આશઙ્કીને પરિહરે છે કે ભાવસ્થૈર્ય પણ થાય છે અને તેથી ભાવસ્વભાવથી તો ભાવના સ્થૈર્યાર્થ ગુણગાન છે, આ પ્રયોજન ભાવાન્તઃપાતિ જ છે, પશ્ચાત્ તે ગુણગાને પ્રયોજનદ્વય પણ સમ્પન્ન થયું, યદ્યપિ ગુણગાન ભાવસ્વભાવથી જ થાય છે, કાંઇ પણ પ્રયોજનાનુસન્ધાને ગુણગાન થતું નથી, તથાપિ પૂર્વભાવનું સ્થૈર્ય પણ આ જ ગુણગાને થાય છે એમ "અન્તઃપ્રવિષ્ટઃ" ઇત્યાદિએ કહ્યું, ગુણગાયને સ્વાનન્દને પૂર્યો, ગાન ભાવકાર્ય હોવાથી અને તે ભાવ પણ ભગવદ્રૂપ હોવાથી ભગવાને પૂર્યો એમ કારિકામાં કહ્યું, અત્ર સ્વાનન્દપૂરણ જ ભાવસ્થૈર્ય છે અને તેનું જ વિવરણ "અન્તઃપ્રવિષ્ટઃ" ઇત્યાદિએ કરે છે, ગાનને અન્તે "રેમિરે અહઃસુ"પદે આ સ્વાનન્દપૂરણ કહ્યું, પૂર્વે જે ભાવાત્મકભગવદાત્મિકા સુધા નાદદ્વારા પ્રવિષ્ટા છે અને જેનું નિરૂપણ "રન્ધ્રાન્ વેણોરધરસુધયા પૂરયન્" શ્લોકે કર્યું હતું તે ભાવાત્મકભગવદાત્મિકા સુધા-બહિઃફલાનુભવપર્યન્તના પૂર્વોક્ત પ્રકારે ક્રમે પુષ્ટા સતી સ્વવિષયરૂપ સ્વપોષક બહિઃસમ્બન્ધને અલભમાના-સ્વવ નહિ પ્રાપ્ત કરતી-તદર્થે-બહિઃસમ્બન્ધાર્થે-ગુણગાનરૂપે પ્રકટા પણ અલબ્ધબહિઃસમ્બન્ધવિષયા સતી તે સુધા-પ્રાકટ્યથી પૂર્વે અન્તઃ સાક્ષાત્ પ્રિયપ્રાકટ્યથી પુનઃ તત્ર જ સ્વના અને અન્યાના પણ શ્રોત્રદ્વારા પ્રવિષ્ટા તે સુધા-તત્ર સ્વવિષય પોષકને આપીને સુસ્થિરા થઈ એ સ્વારસ્ય "અન્તઃપ્રવિષ્ટઃ" ઇત્યાદિએ કહ્યું, આ અધ્યાયમાં યુગ્મશ્લોક ગાનમાં હેતુ "શબ્દાર્થયોઃ" ઇત્યાદિ તૃતીયા કારિકાએ કહે છે, અત્ર અધ્યાયમાં નાદાત્મક શબ્દની

અને તત્પ્રતિપાદ્ય ભગવત્સ્વરૂપાત્મક અર્થની પણ મુખ્યતા છે એ જ્ઞાપનાર્થ યુગ્મશ્લોક છે, પૂર્વે-વેણુગીતે-નાદમાત્રનો અનુભવ હતો અને અત્ર તો નાદાત્મક શબ્દનો અને તત્પ્રતિપાદ્ય ભગવત્સ્વરૂપાત્મક અર્થનો પણ એમ ઉભયનો અનુભવ છે તેથી આ અધ્યાયમાં તે અનુભવનું કથન યુગલશ્લોકે કરે છે, પૂર્વે તો નાદમાત્ર અનુભૂત હતો તેથી નાદપ્રાધાન્યે "અક્ષણ્વતાં" ઇત્યાદિએ ગાન કર્યું અને અધુના તો સ્વરૂપાનુભવ પણ સાક્ષાત્ થયો તેથી નાદ-શબ્દ-અને સ્વરૂપ-અર્થ-એ ઉભયે પણ મહારસરૂપ છે એ જણાવવાને યુગ્મશ્લોકે કથન છે એમ-અને શબ્દનું અને અર્થનું પણ અત્ર એકરૂપત્વ છે એમ-જણાવવાને શ્લોકયુગ્મની એકવાક્યતા છે, 'સર્વેષુ' ઇત્યાદિએ યુગ્મસઙ્ખ્યાતાત્પર્ય કથે છે, અને સર્વે માસમાં જે-લીલા-કરે છે તે નિરૂપાય છે 'તેથી અત્ર તે કથાય છે' એમ વાક્યયોજના કરવી, અત્ર અધ્યાયમાં વર્ષે વર્ષે યાવતી લીલા પ્રભુ કરે છે તાવતી સર્વા લીલાનું ક્રમે ગાન શ્રીસ્વામિનીઓએ કર્યું-કાંઇ એતાવ-માત્રા જ લીલાનું ગાન કર્યું નથી-એમ જણાવવાને પૂર્ણ વર્ષ દ્વાદશમાસાત્મક હોવાથી માસસમાનસઙ્ખ્યાક દ્વાદશ યુગ્મશ્લોક અત્ર કથ્યા એ આશયે "અતોત્ર" ઇત્યાદિએ કથે છે કે તેથી અત્ર દ્વાદશ યુગ્મ કથ્યાં, અત્ર 'માસસમાનસઙ્ખ્યાકયુગ્મા માસયુગ્માઃ' એમ મધ્યમપદલોપી સમાસ જાણવો, કિઞ્ચ ઉપક્રમે અને ઉપસંહારે એમ શ્લોકદ્વયે પણ એક યુગ્મ અધિક થાય છે તેથી અધિક-પુરુષોત્તમ-માસમાં પણ ભગવાન્ જે લીલા કરે છે તેનું પણ ગાન શ્રીગોપીજન કરે છે એ આશયે "આદ્યન્તે" ઇત્યાદિ કથે છે, 'આદિ અને અન્ત તે આદ્યન્ત' એમ સમાહારસમાસ "આદ્યન્તે" પદમાં કરવો, આદિમાં અને અન્તમાં એક અપર યુગ્મ સમાહારે થાય છે, તત્ર પ્રતિપાદ્ય રૂપ "પ્રક્રમઃ" ઇત્યાદિએ કથે છે કે આદ્યશ્લોકમાં ગાનનો ઉપક્રમ છે અને અન્ત્ય શ્લોકમાં "તચ્ચિત્તાસ્તન્મનસ્કાઃ" એમ ફલ છે તેથી આ પ્રકારે સર્વ મળીને આ અધ્યાયમાં (૧૨+૧=૧૩) ત્રયોદશ યુગ્મ છે. ( का. १—४. )

**આભાસ**-એમ ભગવાને સહ રાત્રિક્રીડા કથીને હવે દિવસે ક્રીડાવસાને તે સ્વામિનીઓની સંસારપ્રવૃત્તિ થતી હશે એમ આશઙ્કીને દિવસે તેઓ ભગવદ્ગુણવર્ણનપરા થયાં એમ વદતા-શ્રીશુક-ગુણવર્ણનાના આવશ્યકત્વાર્થે[1] આરમ્ભમાં દુઃખ અને પર્યવસાનમાં સુખ એમ નિરૂપતા-શ્રીશુક-પ્રથમપ્રવૃત્તિમાં પણ દિવસે ગોપિકાને પરમ દુઃખ થયું એમ 'ગોપ્યઃ' ઇત્યાદિ શ્લોકે પ્રથમ કથે છે, અત્ર 'પ્રથમં' પદનો અન્વય 'આહ' પદે સહ કરવો, પ્રથમપ્રવૃત્તિમાં-ગાનારમ્ભમાં-પણ યત્ર દુઃખ તત્ર ગાનાભાવમાં તો કથવું જ શું એમ કૈમુત્યાર્થે 'અપિ' શબ્દનો પ્રયોગ કર્યો.

**गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः ।**
**कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥ १ ॥**

**અક્ષરાર્થ—વનમાં કૃષ્ણ ગયે જ શ્રીગોપીજનનું ચિત્ત તદનુ દ્રવીભૂત થઈ જતું, અને કૃષ્ણલીલાને પ્રકર્ષે ગાતાં તેઓ દુઃખે વાસરનિર્ગમન કરતાં. ૧.**

**વ્યાખ્યાન**-અત્ર 'ગોપ્યઃ' એમ કેવલ પદથી-'ગોવ્રજયોષિતાં'વદ્ અપકર્ષજ્ઞાપક ધર્મની અનુક્તિપૂર્વક શુદ્ધભાવજ્ઞાપક 'ગોપી'પદથી-પૂર્વોક્તા રાસમણ્ડલમધ્યસ્થાનું જ કથન છે-કાંઇ પૂર્વાધ્યાયોક્તાનું કથન નથી-તેથી કેવલ-શુદ્ધ-'ગોપી' પદથી પૂર્વોક્તાનું-રાસમણ્ડલમધ્યસ્થાનું-જ ગ્રહણ કરવું, કૃષ્ણ-સદાનન્દ-વનમાં ગત સતે તે સદાનન્દને અનુ જ દ્રુત થયું છે ચિત્ત જેમનું એવાં 'તમનુદ્રુતચેતા' શ્રીગોપીજન થઈ ગયાં, તેમનું ચિત્ત વસ્ત્ર-તરગ્રહણાક્ષમ થઈ ગયું, 'દ્રુત' શબ્દથી 'વિલય' કથ્યો, તતઃ સર્વત્રપ્રસૃત સૂક્ષ્મભાવાપન્ન-દ્રુતત્વથી વિરલાવયવ-તે ચિત્તે સદાનન્દની લીલાનું ગ્રહણ કર્યું, સર્વાન્તરત્વે આનન્દમય વિરલાવયવ હોવાથી તાદૃશ-સૂક્ષ્મભાવાપન્ન વિરલાવયવ-જ ચિત્ત કૃષ્ણલીલાગ્રહણમાં યોગ્ય છે તેથી તેઓ કૃષ્ણલીલાને પ્રકર્ષે ગાતાં થયાં, જેમ સ્વરૂપ સદાનન્દરૂપ છે તેમ તદાત્મિકા તલ્લીલા પણ સદાનન્દરૂપા છે એમ પણ જણાવવાને પુનઃ "કૃષ્ણલીલાઃ" પદમાં નામગ્રહણ કર્યું, અન્યથા "કૃષ્ણ"પદ પુનઃ ન વદતાં "કૃષ્ણ"પદને સ્થાને 'તત્'પદ જ વદે, અને ત્યારે તો લીલાનું તત્સમ્બન્ધિત્વમાત્ર પ્રાપ્ત થાય પરન્તુ ઉક્તરૂપ તદાત્મકત્વ પ્રાપ્ત થાય નહિ અને એ તદાત્મકત્વ તો અવશ્ય વાચ્ય છે-કારણ કે સ્વરૂપવિયોગમાં તદતિરિક્ત કાંઇ પણ જીવનહેતુ થઈ શકતું નથી કેમ કે તદતિરિક્ત પદાર્થમાત્ર તે સદાનન્દ કૃષ્ણથી હીન છે-આ સર્વ આશયથી "તત્"પદ ન કથતાં પુનઃ "કૃષ્ણ"પદ કથ્યું, તેથી યથાકથઞ્ચિદ્ મહત્ માનસદુઃખે વાસરનું નિર્ગમન કરતાં, પુનઃ જ્યારે

૧. નિરસાધનફલાત્મપુષ્ટિમાર્ગમાં ગુણગાન વિધિપ્રાપ્ત નથી પરન્તુ ભગવદ્દત્તસ્નેહે-વા શ્રવણાદિજન્ય પણ સ્નેહે-આવશ્યક જ છે એમ ૨-૧-૫નાં શ્રીસુબોધિનીજીમાં સિદ્ધ છે.

